# मेघदूत

## (अन्वयाङ्क और संजीवनी समेत गद्यपद्यार्थ)



प्रो० रामदासराय, काव्यतीर्थ

# मेघदूत

By D.P. Paliwal

महाकवि कालिदास प्रणीत मेघदूत काव्य का अन्वयाङ्क और सञ्जीवनी टीका समेत हिन्दी में गद्यपद्यार्थ



रचयिता


ग्रीयर भूमिहार ब्राह्मण कालिज मुजफ्फरपुर के अवसरप्राप्त प्रोफेसर

पण्डित रामदासराय, काव्यतीर्थ,

गाजीपुर ।



प्रकाशक—

शर्मा आदर्श, गाजीपुर

2 = 25

१९५३ ]  [ मूल्य २=)

॥ श्रीः ॥

## संजीवनी समेत गद्यपद्यार्थ

# मेघदूत

## पूर्वार्ध

( १ )

**कश्चित् कान्ताविरहगुरुणा स्वाधिकारात्प्रमत्तः**
**शापेनास्तङ्गमितमहिमा वर्षभोग्येण भर्त्तुः ।**
**यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु**
**स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥**

कश्चिदिति ॥ स्वाधिकारात्स्वनियोगात्प्रमत्तोऽनवहितः ॥ "प्रमादोऽनवधानता" इत्यमरः । "जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्" इत्यपादानत्वम् । तस्मात्पञ्चमी ॥ अतएवापराधाद्धेतोः । कान्ताविरहेण गुरुणा दुर्भरेण । दुस्तरेणेत्यर्थः ॥ "गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे" इति शब्दार्णवे ॥ वर्षभोग्येण संवत्सरभोग्येण ॥ "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया । "अत्यन्तसंयोगे च" इति समासः । "कुमति च" इति णत्वम् । भर्तुः स्वामिनः शापेन । अस्तंगमितो महिमा सामर्थ्यं यस्य सोऽस्तंगमितमहिमा । अस्तमिति [illegible] । तस्य "द्वितीया" इति योगविभागात्समासः ॥ कश्चिदनि-

दिष्टनामा यक्षो देवयोनिविशेषः ॥ "विद्याधराप्सरोयक्षरक्षोगन्धर्वकिन्नराः । पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः" इत्यमरः॥ जनकतनयायाः सीतायाः स्नानैरवगाहनैः पुण्यानि पवित्राण्युदकानि येषु तेषु । पावनेष्वित्यर्थः ॥ छायाप्रधानास्तरवश्छायातरवः ॥ शाकपार्थिवादित्वात्समासः ॥ स्निग्धाः सान्द्राश्छायातरवो नमेरुवृक्षा येषु तेषु । वसतियोग्येष्वित्यर्थः ॥ "स्निग्धं तु मसृणे सान्द्रे" इति । "छायावृक्षो नमेरुः स्यात्" इति च शब्दार्णवे ॥ रामगिरेश्चित्रकूटस्याश्रमेषु वसतिम् ॥ "वहिवस्यर्तिभ्यश्च" इत्यौणादिकोऽतिप्रत्ययः॥ चक्रे कृतवान् ॥ अत्र रसो विप्रलम्भाख्यः शृंगारः । तत्राप्युन्मादावस्था । अतएवैकत्रानवस्थानं सूचितमाश्रमेष्विति बहुवचनेन ॥ सीतां प्रति रामस्य हनुमत्संदेशं मनसि निधाय मेघसंदेशं कविः कृतवानित्याहुः ॥ अत्र काव्ये सर्वत्र मन्दाक्रान्तावृत्तम् । तदुक्तम्—"मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्" इति ॥

अपने काम में ग़लती करता हुआ और अपने स्वामी के ऐसे दण्ड से जिसमें उसे वर्षभर अपनी स्त्री से अलग रहने का दुःख उठाना पड़नेवाला था, अपनी बड़ाई खोता हुआ—कोई यक्ष उस रामगिरि आश्रम में जा बसा—जहाँ के जल श्रीजानकी महाराणी के स्नान करने से पवित्र बने हुए थे और जहाँ पेड़ों की सुन्दर हरियाली थी।

उचित न करनेवाला कोई यक्ष शाप निजभर्ता द्वार ।
प्रिया विरह गुरु वर्ष भोग्य पा अस्तंगत महिमा व्यापार—
वसा रामगिरि के आश्रम जा तरुओं में घन छाँह अनूप
जहाँ स्नान से जनकसुता के सलिल बने थे पावनरूप ॥

कारज में उनमत्त भएँ एक जक्ष दई सब खोइ बड़ाई ।
जोय तें दूर रहे बरसेक लों सोंह बड़ी निज नाथ खवाई ॥

जाय बस्यो गिरि राम के आश्रम रूख घनेन में गेह बनाई ।
जानकी स्नानन पुन्य प्रताप भई जहँ नीरन में पविताई ॥

( २ )

**तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी**
**नीत्वा मासान्कनकवलयभ्रंशरिक्तप्रकोष्ठः ।**
**आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं**
**वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श ॥**

तस्मिन्निति ॥ तस्मिन्नद्रौ चित्रकूटाद्रौ अबलाविप्रयुक्तः कान्ताविरही । कनकस्य वलयः कटकम् ॥ "कटकं वलयोऽस्त्रियाम्" इत्यमरः ॥ तस्य भ्रंशेन पातेन रिक्तः शून्यः प्रकोष्ठः कूर्परादधःप्रदेशो यस्य स तथोक्तः ॥ "कक्षान्तरे प्रकोष्ठः स्यात्प्रकोष्ठः कूर्परादधः" इति शाश्वतः ॥ विरहदुःखात्कृश इत्यर्थः । कामी कामुकः स यक्षः । कतिचिन्मासान् । अष्टौ मासानित्यर्थः । "शेषान्मासान्गमय चतुरः" इतिवक्ष्यमाणत्वात् ॥ नीत्वा यापयित्वा । आषाढानक्षत्रेण युक्ता पौर्णमास्याषाढी ॥ "नक्षत्रेण युक्तः कालः" इत्यण् । "टिड्ढाणञ्–"इत्यादिना ङीप् ॥ साषाढ्यस्मिन्पौर्णमासीत्याषाढो मासः ॥ "सास्मिन्पौर्णमासीति संज्ञायाम्" इत्यण् ॥ तस्य प्रथमदिवस आश्लिष्टसानुमाक्रान्तकूटम् । वप्रक्रीडा उत्खातकेलयः ॥ "उत्खातकेलिः क्रीडाद्यैर्वप्रक्रीडा निगद्यते" इति शब्दार्णवे ॥ तासु परिणतस्तिर्यग्दन्तप्रहारः ॥ "तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः" इति हलायुधः ॥ स चासौ गजश्च तमिव प्रेक्षणीयं मेघं ददर्श ॥ गजप्रेक्षणीयमित्यत्रेवलोपाल्लुप्तोपमा ॥ केचित् "आषाढस्य प्रथमदिवसे" इत्यत्र "प्रत्यासन्ने नभसि" इति वक्ष्यमाणनभोमासस्य प्रत्यासत्त्यर्थं "प्रशमदिवसे" इति पाठं कल्पयन्ति । तदसङ्गतम् । प्रथमातिरेकेकारणाभावान्नभोमासस्य प्रत्यासत्त्यर्थमित्युक्तमिति चेन्न । प्रत्यासत्तिमात्रस्य मासप्रत्यासत्त्यैव प्रथमदिवसस्याप्यु-

पपत्तेः । अत्यन्तप्रत्यासत्तेरुपयोगाभावेनाविवक्षितत्वात् । विवक्षितत्वे वा स्वपक्षेऽपि प्रथमदिवसातिक्रमेण मेघदर्शनकल्पनायां प्रमाणाभावेन तदसम्भवात् । प्रत्युतास्मत्पक्षएव कुशलसंदेशस्य भाव्यनर्थप्रतीकारार्थस्य पुरत एवानुमानमुक्तं भवतीत्युपयोगसिद्धिः । ननून्मत्तस्य नायं विवेक इति चेन्न । उन्मत्तस्य नानर्थस्य प्रतीकारार्थं प्रवृत्तिरपीति संदेश एव माभूत् ॥ तथा च काव्यारम्भ एवाप्रसिद्धः स्यादित्यहो मूलच्छेदी पाण्डित्यप्रकर्षः । कथं तर्हि "शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ" इत्यादिना भगवत्प्रबोधावधिकस्य शापस्य मासचतुष्टयावशिष्टस्योक्तिः । दशदिवसाधिक्या दति चेत्स्वपक्षेऽपि कथं सा विंशतिदिवसैर्न्यूनत्वादिति संन्तोष्टव्यम् ॥ तस्मादीषद्वैषम्यमविवक्षितमिति सुष्ठूक्त "प्रथमदिवसे" इति ॥

जिसके हाथ से, पहुँचे के दुबला होने से, कंकण गिर रहा था ऐसे स्त्रीवियोगवाले उस कामी पुरुष यक्ष के उस पर्वत में कई महीने बीत जाने पर उसे आषाढ़ महीने के पहिले दिन का मेघ पहाड़ की चोटी को घेरे हुए ऐसा दीख पड़ा जैसे कोई हाथी कीचड़ की क्रीड़ा करता हो (उपमा में मेघ की उस गज से समता की गई है जो अपने दाँतों को टेढ़ा किये कीचड़ उखाड़ रहा है)।

कनक वलय के गिर जाने से धारे निज प्रकोष्ठ को रिक्त
उस कामी ने उस पर्वत में बिता मास निज कितने तिक्त ।
आने पर आषाढ़ मास के पहले दिन के सुभग स्वरूप
मिले शृङ्ग से गढ़ क्रीड़ा रत करिवर सा घन लखा अनूप ॥

बसि ताहि महीधर में बिरही कितने एक मास बिताइ गयो ।
भुजबंद गए गिर सोरन के इतनो थकि दूबर गात भयो ॥

फिर लागत मास असाढ़ लख्यो घन शैल पै सोहनो आइ छयो ।
झुक के मनहू गजराज बली गढ़ढावन खेल मचाइ रह्यो ॥

( ३ )

**तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतो-**
**रन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ ।**
**मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः**
**कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥**

तस्येति ॥ राजानो यक्षाः ॥ "राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः" इति विश्वः । राज्ञां राजा राजराजः कुबेरः ॥ "राज राजो धनाधिपः" इत्यमरः । "राजाहःसखिभ्यष्टच्" इति टच्प्रत्ययः ॥ तस्यानुचरो यक्षः । अन्तर्बाष्पो धीरोदात्तत्वादन्तःस्तम्भिताश्रुः सन् । कौतुकाधानहेतोरभिलाषोत्पादककारणस्य ॥ "कौतुकं चाभिलाषे स्यादुत्सवे नर्महर्षयोः" इति विश्वः ॥ तस्य मेघस्य पुरोऽग्रे कथमपि । गरीयसा प्रयत्नेनेत्यर्थः ॥ ज्ञानहेतुविवक्षायामप्यादिकथमव्ययम् । कथमादि तथाप्यन्तं यत्नगौरवबाढ्योः" इत्युज्वलः ॥ स्थित्वा चिरं दध्यौ चिन्तयामास ॥ "ध्यै चिन्तायाम्" इति धातोर्लिट् ॥ मनोविकारोपशमनपर्यन्तमिति शेषः ॥ विकारहेतुमाह-मेघालोक इति ॥ मेघालोके मेघदर्शने सति सुखिनोऽपि प्रियादिजनसङ्गतस्यापि चेतश्चित्तमन्यथाभूता वृत्तिर्व्यापारो यस्य तदन्यथावृत्ति भवति । विकृतिमापद्यत इत्यर्थः । कण्ठाश्लेषप्रणयिनि कण्ठालिङ्गनार्थिनि जने । दूरे संस्था स्थितिर्यस्य तस्मिन्दूरसंस्थे सति किं पुनः । विरहिणः किमुत वक्तव्यमित्यर्थः । विरहिणां मेघसंदर्शनमुद्दीपनं भवतीति भावः ॥ अर्थान्तरन्यासोऽलंकारः । तदुक्तं दण्डिना-"ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किंचन । तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः" इति ॥

पपत्तेः । अत्यन्तप्रत्यासत्तेरुपयोगाभावेनाविवक्षितत्वात् । विवक्षितत्वे वा स्वपक्षेऽपि प्रथमदिवसातिक्रमेण मेघदर्शनकल्पनायां प्रमाणाभावेन तदसम्भवात् । प्रत्युतास्मत्पक्षएव कुशलसंदेशस्य भाव्यनर्थप्रतीकारार्थस्य पुरत एवानुमानमुक्तं भवतीत्युपयोगसिद्धिः । ननून्मत्तस्य नायं विवेक इति चेन्न । उन्मत्तस्य नानर्थस्य प्रतीकारार्थं प्रवृत्तिरपीति संदेश एव माभूत् ॥ तथा च काव्यारम्भ एवाप्रसिद्धः स्यादित्यहो मूलच्छेदी पाण्डित्यप्रकर्षः । कथं तर्हि "शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ" इत्यादिना भगवत्प्रबोधावधिकस्य शापस्य मासचतुष्ट्यावशिष्टस्योक्तिः । दशदिवसाधिक्या दति चेत्स्वपक्षेऽपि कथं सा विंशतिदिवसैर्न्यूनत्वादिति संतोष्टव्यम् ॥ तस्मादीषद्वैषम्यमविवक्षितमिति सुष्ठूक्त "प्रथमदिवसे" इति ॥

जिसके हाथ से, पहुँचे के दुबला होने से, कंकण गिर रहा था ऐसे स्त्रीवियोगवाले उस कामी पुरुष यक्ष के उस पर्वत में कई महीने बीत जाने पर उसे आषाढ़ महीने के पहिले दिन का मेघ पहाड़ की चोटी को घेरे हुए ऐसा दीख पड़ा जैसे कोई हाथी कीचड़ की क्रीड़ा करता हो ( उपमा में मेघ की उस गज से समता की गई है जो अपने दाँतों को टेढ़ा किये कीचड़ उखाड़ रहा है ) ।

कनक वलय के गिर जाने से धारे निज प्रकोष्ठ को रिक्त
उस कामी ने उस पर्वत में बिता मास निज कितने तिक्त ।
आने पर आषाढ़ मास के पहले दिन के सुभग स्वरूप
मिले शृङ्ग से गढ़ क्रीड़ा रत करिवर सा घन लखा अनूप ॥

बसि ताहि महीधर में बिरही कितने एक मास बिताइ गयो ।
भुजबंद गए गिर सोरन के इतनो थकि दूबर गात भयो ॥

फिर लागत मास असाढ़ लख्यो घन शैल पै सोहनो आइ छयो।
झुक के मनहू गजराज बली गढ़ढावन खेल मचाइ रह्यो ॥

( ३ )

**तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतो-**
**रन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ ।**
**मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः**
**कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥**

तस्येति ॥ राजानो यक्षाः ॥ "राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः" इति विश्वः । राज्ञां राजा राजराजः कुबेरः ॥ "राज राजो धनाधिपः" इत्यमरः । "राजाहःसखिभ्यष्टच्" इति टच्प्रत्ययः ॥ तस्यानुचरो यक्षः । अन्तर्बाष्पो धीरोदात्तत्वादन्तःस्तम्भिताश्रुः सन् । कौतुकाधानहेतोरभिलाषोत्पादककारणस्य ॥ "कौतुकं चाभिलाषे स्यादुत्सवे नर्महर्षयोः" इति विश्वः ॥ तस्य मेघस्य पुरोऽग्रे कथमपि । गरीयसा प्रयत्नेनेत्यर्थः ॥ ज्ञानहेतुविवक्षायामप्यादिकथमव्ययम् । कथमादि तथाप्यन्तं यत्नगौरवबाढ्योः" इत्युज्ज्वलः ॥ स्थित्वा चिरं दध्यौ चिन्तयामास ॥ "ध्यै चिन्तायाम्" इति धातोर्लिट् ॥ मनोविकारोपशमनपर्यन्तमिति शेषः ॥ विकारहेतुमाह-मेघालोक इति ॥ मेघालोके मेघदर्शने सति सुखिनोऽपि प्रियादिजनसङ्गतस्यापि चेतश्चित्तमन्यथाभूता वृत्तिर्व्यापारो यस्य तदन्यथावृत्ति भवति । विकृतिमापद्यत इत्यर्थः । कण्ठाश्लेषप्रणयिनि कण्ठालिङ्गनार्थिनि जने । दूरे संस्था स्थितिर्यस्य तस्मिन्दूरसंस्थे सति किं पुनः । विरहिणः किमुत वक्तव्यमित्यर्थः । विरहिणां मेघसंदर्शनमुद्दीपनं भवतीति भावः ॥ अर्थान्तरन्यासोऽलंकारः । तदुक्तं दण्डिना-"ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किंचन । तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः" इति ॥

अपने आँसुओं को भीतर रोककर, वह कुबेर का अनुचर अभिलाषा उत्पन्न करनेवाले उस मेघ के आगे किसी प्रकार खड़े होकर, देर तक चिन्तन ( ध्यान ) करता रहा । क्योंकि मेघदर्शन से सुखी मनुष्यों के भी चित्त में विकार उत्पन्न हो जाता है तब कण्ठालिङ्गन के प्रेमी जन यदि दूर जा बसें तो उनका कहना ही क्या ( यक्षजाति सुख भोगनेवाली कही जाती है ) ।

उस अभिलाषा हेतु मेघ के जा सन्मुख में किसी प्रकार
रोक नेत्रजल राजराज के चिर अनुचर ने किया विचार ।
योगी जन का अभ्यन्तर भी घन लख करता प्राप्त विकार
तब प्रेमी प्रणयी का कहना क्या जो बसता दूरी धार ॥

तिहिं केतकी फूल फुलावनहार के सन्मुख दास कुबेर गयो ।
उर अन्तर में अँसुवा भर के बड़ी बेर लों सोचत ठाढ़ो रह्यो ॥
चित कंठ लगे सुखियानहु को न रहे थिर देखत मेघ नयो ।
फिर बात कहा उनकी कहिये जिन मीत तें दूर बसेरो लयो ॥

( ४ )

[४]प्रत्यासन्ने न[३]भसि द[१]यिताजीवितालम्बनार्थी
[५]जीमूतेन स्व[६]कुशलमयीं हा[८]रयिष्यन्प्र[७]वृत्तिम् ।
स[२] प्र[१०]त्यग्रैः कु[११]टजकुसुमैः क[१२]ल्पितार्घाय त[१३]स्मै
[९]प्रीतः [१४]प्रीतिप्रमुखवचनं स्व[१५]ागतं व्या[१६]जहार ॥

प्रत्यासन्न इति ॥ स यक्षः । यश्चिरं दध्यौ स इत्यर्थः । नभसि श्रावणे ॥ "नभः खं श्रावणो नभाः" इत्यमरः ॥ प्रत्यासन्नः आषाढस्यानन्तरं संनिकृष्टे । प्राप्ते सतीत्यर्थः । दयिताजीवितालम्बनार्थी सन् । वर्षाकालस्य विरहदुःखजनकत्वात् "उत्पन्नानर्थप्रतीकारादनर्थोत्पत्तिप्रतिबन्ध एव वरम्" इति न्यायेन प्रागेव प्रियाप्राणधारणोपायं चिकीर्षुरित्यर्थः । जीवनस्योदकस्य मूतः पटबन्धो वस्त्रबन्धो जीमूतः ॥ पृषोदरादित्वात्साधुः । "मूतः स्यात्पटबन्धेऽपि" इति रुद्रः ॥ तेन जीमूतेन जलधरेण । प्रयोज्येन । स्वकुशलमयीं स्वक्षेमप्रधानां प्रवृत्तिं वार्ताम् ॥ "वार्ता प्रवृत्तिर्वृत्तान्तः" इत्यमरः ॥ हारयिष्यन्प्रापयिष्यन् ॥ "लृट् शेषे च" इति चकारात्क्रियार्थक्रियोपपदाल्लृट्प्रत्ययः ॥ जीवनार्थं कर्म जीवनप्रदेनैव कर्तव्यमिति भावः ॥ "हृक्रोरन्यतरस्याम्" इति कर्मसंज्ञाया विकल्पात् । पक्षे कर्तरि तृतीया ॥ प्रत्यग्रैरभिनवैः कुटजकुसुमैर्गिरिमल्लिकाभिः ॥ "कुटजो गिरिमल्लिका" इति हलायुधः ॥ कल्पितार्घाय कल्पितोऽनुष्ठितोऽर्घः पूजाविधिर्यस्मै तस्मै ॥ "मूल्ये पूजाविधावर्घः" इत्यमरः ॥ तस्मै जीमूताय ॥ "क्रियाग्रहणमपि कर्तव्यम्" इतिसम्प्रदानत्वाच्चतुर्थी ॥ प्रीतिमुखानि प्रीतिपूर्वकाणि वचनानि यस्मिन्कर्मणि तत्प्रीतिप्रमुखवचनं यथा तथा । शोभनमागतं स्वागतं स्वागतवचनं प्रीतः सन्व्याजहार । कुशलागमनं पप्रच्छेत्यर्थः ॥ नाथेन त्वत्र "प्रत्यासन्ने मनसि" इति साधीयान्पाठः कल्पितः । प्रत्यासन्ने प्रकृतिमापन्ने सतीत्यर्थः । यस्तु तेनैव पूर्वपाठविरोधः प्रदर्शितः सोऽस्माभिः "आषाढस्य प्रथमदिवसे" इत्येतत्पाठविकल्पसमाधानेनैव समाधाय परिहृतः ॥

**अपनी स्त्री का जीवनआधार वह यक्ष, श्रावण मास आता जान मेघ द्वारा अपनी स्त्री को अपना कुशल संवाद भिजवाने की इच्छा करता हुआ, नये २ कुटजकुसुमों से अर्घ बनाता हुआ, प्रसन्न होकर स्वागत के रूप में प्रीतिसंयुक्त बोला ।**

**श्रावण आने पर दयिता को होने का जीवन आधार**
**घन के द्वारा कुशलमयी निज कथा भिजाने लिये विचार ।**

कुटज कुसुम का अर्घ बनाकर अर्पण करके सादर
बोला प्रीत वचन निज मुख से स्वागत वचन सुनाकर ॥

सावन आइ समीप लग्यो तब नारि के प्रान बचावन काज ।
बादर दूत बनावन कों कुशलात सँदेस पठावन काज ॥
कूटजफूल नए कर लै मनकल्पित अर्घ बनावन काज ।
बोल उठ्यो हँसते मुख ह्वै वह मेघ तें प्रीति बढ़ावन काज ॥

( ५ )

धूमज्योतिः सलिलमरुतां संनिपातः क्व मेघः
सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।
इत्यौत्सुक्यादपरिगणयन्गुह्यकस्तं ययाचे
कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥

धूमेति ॥ धूमश्च ज्योतिश्च सलिलं च मरुद्वायुश्च तेषां संनिपातः संघातो मेघः क्व । अचेतनत्वात्सन्देशानर्ह इत्यर्थः । पटुकरणैः समर्थेन्द्रियैः ॥ "करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि" इत्यमरः ॥ प्राणिभिश्चेतनैः ॥ "प्राणी तु चेतनो जन्मी" इत्यमरः ॥ प्रापणीयाः प्रापयितव्याः । संदिश्यन्त इति संदेशास्त एवार्थाः क्व । इत्येवमौत्सुक्यादिष्टार्थोद्युक्तत्वात् ॥ "इष्टार्थोद्युक्त उत्सुकः" इत्यमरः ॥ सम्प्रदानत्वात्कुशलप्रश्नेनाभिमुखीचकारेत्यर्थः । अपरिगणयन्नविचारयन्गुह्यको यक्षस्तं मेघं ययाचे याचितवान् ॥ "टुयाचृ याच्ञायाम्" ॥ तथाहि । कामार्ता मदनातुराश्चेतनाश्चाचेतनाश्च तेषु विषये प्रकृति कृपणाः स्वभावदीनाः । कामान्धानां युक्तायुक्तविवेकशून्यत्वादचेतनयाञ्चा न विरुध्यत इत्यर्थः ॥ अत्र मेघ-संदेशयोर्विरूपयोर्घटनाद्विषमालङ्कारः । तदुक्तम्-"विरुद्धकार्यस्योत्पत्तिर्यत्रानर्थस्य वा भवेत् । विरूपघटना चासौ विषमालंकृतिस्त्रिधा ॥" इति । सा चार्थान्तरन्यासानुप्राणिता, तत्समर्थकत्वेनैव चतुर्थपादे तस्योपन्यासात् ॥

कहाँ मेघ धूएँ, आग, पवन और पानी के मेल से बना हुआ है और कहाँ संदेश ऐसे पुरुषों के द्वारा भेजा जाता है जिनकी इन्द्रियाँ सजग होती हैं—इस बात को अपने काम में बहुत लगे रहने से नहीं समझता हुआ वह उस मेघ से याचना करने लगा। काम-पीड़ित पुरुष चेतन अचेतन के मध्य अन्तर नहीं समझते।

धूम अनल संभव सुनु भाई।
तेहि बुझाव घन पदवी पाई॥ तुलसीदास

धूम घाम जल और अनिल का मेल कहाँ है मेघ अजान
ले जाता संदेशा जिसको होता इन्द्रिय का बर ज्ञान।
गुह्यक ने जाँचा जा उसको नहिं इसकी कुछ गणना धार
जाता नहिं कामार्त्त जीवसे जड़ चेतन का किया विचार॥

घाम धूम नीर और समीर मिले पाई देह
ऐसो घन कैसे दूतकाज भुगतावेगो।
नेह कौ सँदेसो हाथ चातुर पठैवे जोग
बादर कहो जी ताहि कैसे के सुनावेगो॥
बाढ़ी उत्कंठा जक्ष बुद्धि बिसरानी सब
वाही सों निहोस्यो जानि काज कर आवेगो।
कामातुर होत हैं सदाई मतिहीन तिन्हें
चेत औ अचेत माहँ भेद कहा पावेगो॥

( ६ )

**जातं वंशे भुवनविदिते पुष्करावर्त्तकानां**
**जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ।**
**तेनार्थित्वं त्वयि विधिवशाद्दूरबन्धुर्गतोऽहं**
**याच्ञामोघा वरमधिगुणे नाधमे लब्धकामा ॥**

जातमिति ॥ हे मेघ, त्वां भुवनेषु विदिते भुवनविदिते ॥ "निष्ठा" इति भूतार्थे क्तः । "मतिबुद्धि-" इत्यादिना वर्तमानार्थत्वेऽपि "क्तस्य च वर्तमाने" इति भुवनशब्दस्य षष्ठ्यन्ततानियमात्समासो न स्यात् । "क्तेन च पूजायाम्" इति निषेधात् ॥ पुष्कराश्चावर्तकाश्च केचिन्मेघानां श्रेष्ठास्तेषां वंशे जातम् । महाकुलप्रसूतमित्यर्थः । कामरूपमिच्छाधीनविग्रहम् । दुर्गादिसंचारक्षममित्यर्थः । मघोन इन्द्रस्य प्रकृतिपुरुषं जानामि । तेन महाकुलप्रसूतत्वादिगुणयोगित्वेन हेतुना विधिवशाद्दैवायत्तत्वात् ॥ "विधिर्विधाने दैवे च" इत्यमरः ॥ वशमायत्ते ॥ "वशमिच्छाप्रभुत्वयोः" इति विश्वः ॥ दूरे बन्धुर्यस्य स दूरबन्धुर्वियुक्तभार्योऽहं त्वय्यर्थित्वं गतः ॥ ननु याचकस्य याच्ञायां याच्यगुणोत्कर्षः कुत्रोपयुज्यत इत्याशङ्क्य दैवाद्याच्ञाभङ्गेऽपि लाघवदोषाभाव एवोपयोग इत्याह—याच्ञेति ॥ तथाहि । अधिगुणेऽधिकगुणे पुंसि विषयेः याच्ञा मोघा निष्फलापि वरमीषत्प्रियम् । दातुर्गुणाढ्यत्वात्प्रियत्वं याच्ञावैफल्यादीषत्प्रियत्वमिति भावः ॥ अधमे निर्गुणे याच्ञा लब्धकामापि सफलापि न वरम् । ईषत्प्रियमपि न भवतीत्यर्थः ॥ "देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये" इत्यमरः ॥ अर्थान्तरन्यासानुप्राणितः प्रेयोऽलङ्कारः । तदुक्तं दण्डिना—"प्रेयः प्रियतराख्यानम्" इति ॥ एतदाद्ये पादत्रये चतुर्थपादस्थेनार्थान्तरन्यासेनोपजीवितमिति सुव्यक्तमेतत् ॥

**मैं तुम्हें पुष्कर और आवर्तक मेघों के प्रसिद्ध वंश में जनमा हुआ और इन्द्र का कामचारी प्रधान पुरुष समझता हूँ। इसलिये मैं अपने प्रियपात्र से दैववश दूर बसा हुआ**

तुम्हारा भिक्षुक बनता हूँ। क्योंकि बड़े लोगों के यहाँ प्रार्थना निष्फल होवे तौभी वह नीच पुरुषों के यहाँ अभिलाषा पूरी होने से भी अच्छी है।

भुवन विदित पुष्कर, आवर्तक कुल में तेरा जन्म महान
कामरूप मैं तुझे समझता देवराज का पुरुष प्रधान।
विफल याँचना भली भलों में नहिं अभलों में फली अपार
बन्धुजनों से हुआ दूर मैं करता तव अर्थित्व स्वीकार ॥

पुष्करावर्तक हैं प्रसिद्ध लोकलोकन में
बंश तिनही के नीके तैने जन्म पायो है।
इच्छारूप धारन की गति है दई ने दई
मन्त्री सुरराजहू ने आपनो बनायो है॥
एते गुन जानि तौपै मँगिता भयो हूँ मेघ
बंधुन तें दूर मोहि विधि ने बसायो है।
सज्जन पै माँगनो बिनाहू सरैं काज भलो
नीच पै सरेहू काज आछो ना बतायो है॥

( ७ )

संतप्तानां त्वमसि शरणं तत्पयोद प्रियायाः
संदेशं मे हर धनपतिक्रोधविश्लेषितस्य।
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां
बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥

संतप्तानामिति ॥ हे पयोद, त्वं संतप्तानामातपेन वा प्रवासविरहेण वा संज्वरितानाम् ॥ "संतापः संज्वरः समौ" इत्यमरः ॥ शरणं पयोदानेनातपखिन्नानां प्रोषितानां स्वस्थानप्रेरणया च रक्षकोऽसि ॥ "शरणं गृहरक्षित्रोः" इत्यमरः ॥ तत्तस्मात्कारणाद्धनपतेः कुबेरस्य क्रोधेन विश्लेषितस्य प्रियया वियोजितस्य मे मम संदेशं वार्तां प्रियाया हर । प्रियां प्रति नयेत्यर्थः ॥ सम्बन्धसामान्ये षष्ठी ॥ संदेशहरणेनावयोः सन्तापं नुदेत्यर्थः ॥ कुत्र स्थाने सा स्थिता तत्स्थानस्य वा किं व्यावर्तकं तत्राह—गन्तव्येति ॥ बहिर्भवं बाह्यम् ॥ "बहिर्देवपञ्चजनेभ्यश्च" इति यञ् ॥ बाह्य उद्याने स्थितस्य हरस्य शिरसि या चन्द्रिका तया धौतानि निर्मलानि हर्म्याणि धनिकभवनानि यस्यां सा तथोक्ता ॥ "हर्म्यादि धनिनां वासः" इत्यमरः ॥ अनेन व्यावर्तकमुक्तम् ॥ अलका नामालकेति प्रसिद्धा यक्षेश्वराणां वसतिः स्थानं ते तव गन्तव्या । त्वया गन्तव्येत्यर्थः॥ "कृत्यानां कर्तरि वा" इति षष्ठी ॥

हे मेघ ! तुम सन्तप्तहृदयों के शरण हो, तब तुम मुझ कुबेर के क्रोध से बिछुड़े हुए का संवाद ले जावो। तुम्हे यक्षेश्वर की अलका नाम पुरी में जाना है—जहाँ के बड़े २ प्रासाद बाग में रहने वाले महादेव के सिर की चन्द्रकला से धवलित हैं ( अलकापुरी में कुबेर और कैलास में महादेव का वास है दोनों पुरियाँ पास पास समझी जाती हैं )।

हे पयोद ! संतप्त जनों का तू होता जो शरण अशेष
मुझ कुबेर के कोप पड़े का ले जा कुशल प्रिया के देश।
जहाँ बाह्य उद्यान निवासी स्वयं शम्भु की शशि द्युति द्वार
तव गंतव्य भवन अलका के धुलते धनपति के आगार ॥

तू तौ है सहाई तनताप के सताएन कौ
भयो हूँ वियोगी मैं कुबेर-कोप पाइ के।

छेम कौ सँदेसो यातें मेरी प्रानप्यारी पास
अलकापुरी में मीत दीजो पहुँचाइ के ॥
देखन ही जोग आछि नगरी बनी है वह
लीनो जक्षराजन सुवास जहाँ आइ के।
बागन में बाहरें विराजें चंदचूड़ जा के
नित्त ही अटान रहें चंदछटा छाइ के ॥

( ८ )

**त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः**
**प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसन्त्यः ।**
**कः संनद्धे विरहविधुरां त्वय्युपेक्षेत जायां**
**न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ॥**

त्वामिति ॥ पवनपदवीमाकाशमारूढं त्वाम् । पन्थानं गच्छन्ति ते पथिकाः ॥ "पथः ष्कन्" इति ष्कन्प्रत्ययः ॥ तेषां वनिताः प्रोषितभर्तृकाः । प्रत्ययात्प्रियागमनविश्वासात् ॥ "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः॥ आश्वसन्त्यो विश्वसिताः । श्वसिधातोः शत्रन्तात् "उगितश्च" इति ङीप् ॥ तथोद्गृहीतालकान्ता दृष्टिप्रसारार्थमुन्नमय्य धृतालकाग्राः सत्यः प्रेक्षिष्यन्ते अत्युत्कण्ठतया द्रक्ष्यन्तीत्यर्थः ॥ मदागमनेन पथिकाः कथमागमिष्यन्तीत्यत्राह तथाहि । त्वयि संनद्धे व्यापृते सति विरहेण विधुरां विवशां जायां क उपेक्षेत । न कोऽपीत्यर्थः अन्योपि मद्व्यतिरिक्तोऽपि यो जनोऽहमिव पराधीनवृत्तिः परायत्तजीवनको न स्यात् ॥ स्वतन्त्रस्तु न कोऽप्युपेक्षेतेति भावः ॥ अत्रार्थान्तरन्यासोऽलङ्कारः । तदुक्तम्—"कार्यकारणसामान्यविशेषाणां परस्परम् । समर्थनं यत्र सोऽर्थान्तरन्यास उदाहृतः ॥" इति लक्षणात् ॥

तुमको आकाश में प्राप्त हुआ जान कर पथिकों की स्त्रियाँ विश्वास बश अपने अलकों को ऊपर उठा उठा देखेंगी। तुम्हारे पहुँचने पर विरह व्याकुल अपनी स्त्री को कौन छोड़ सकता है जो मेरे ही ऐसे पराधीन न हो (नीचे की दो पंक्तियों में अर्थान्तरन्यास है)।

पवन पंथ जब तुम धर लोगे ले कर में अलकों का भार
पथिक नारियाँ तुम्हे लखेंगी प्रत्यय अपने उर में धार।
विरह विकल निज प्रिया भुलावे कौन तुझे लख हुए प्रवृत्त
पराधीन की वृत्ति पालता जो हो मम समान नहिं चित्त॥

बातपंथ जात तोहि नारी परदेसिन की
देखेंगी बार बार अलकें कर सों उठाइ।
बालम के आवन की आसा उर लाइ लाइ
धीरज धरेंगी नेक चिंता जिय सों बिहाइ॥
आएँ तो समीप कोई नारि को बिसारे नाहिं
बिरहाबिथा में नर जोपै अपनी बसाइ।
ऐसो मंदभागी मैं हूँ दूसरो न और होइ
पराधीनवृत्ति हेत बैठो सुख हूँ नसाइ॥

( ९ )

मन्दं मन्दं नुदति पवनश्चाऽनुकूलो यथा त्वां
वामश्चाऽयं नदति मधुरं चातकस्ते सगन्धः।
गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः
सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः॥

मन्दं मन्दमिति ॥ अनुकूलः पवनो वायुस्त्वां मन्दं मन्दम् । अतिमन्दमित्यर्थः ॥ अत्र कथञ्चिद्वीप्सायामेव द्विरुक्तिर्निर्वाह्या । "प्रकारेगुणवचनस्य" इत्येतदाश्रयणे तु कर्मधारयवद्भावे सुब्लुकि मन्दमन्दमिति स्यात् । तदेवाह वामनः—"मन्दमन्दमित्यत्र प्रकारार्थे द्विर्भावः।" इति ॥ यथा सदृशम् । भाविफलानुरूपमित्यर्थः ॥ "यथा सादृश्ययोग्यत्ववीप्सास्वार्थानतिक्रमे" इति यादवः ॥ नुदति प्रेरयति । अयं सगन्धः सगर्वः । सम्बन्धीति केचित् ॥ "गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः" इत्युभयत्रापि विश्वः ॥ ते तव वामो वामभागस्थः ॥ "वामस्तु वक्रे रम्ये स्यात्सव्ये वामगतेऽपि च" इति शब्दार्णवे। चातकः पक्षिविशेषश्च मधुरं श्राव्यं नदति व्याहरति ॥ इदं निमित्तद्वयं वर्तते। वर्तिष्यते चापरं निमित्तमित्याह—गर्भेति गर्भः कुक्षिस्थो जन्तुः ॥ "गर्भोपकारके ह्यग्नौ सुखे पनसकण्टके । कुक्षौ कुक्षिस्थजन्तौ च" इति यादवः ॥ तस्याधानमुत्पादनं तदेव क्षण उत्सवः । सुखहेतुत्वादिति भावः ॥ "निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः" इत्यमरः ॥ तस्मिन्परिचयादभ्यासाद्धेतोः खे व्योम्नि । आबद्धमालाः । गर्भाधानसुखार्थं त्वत्समीपे बद्धपङ्क्तय इत्यर्थः ॥ उक्तं च कर्णोदये—"गर्भं बलाका दधतेऽभ्रयोगान्नाके निबद्धावलयः समन्तात्" इति ॥ बलाका बलाकाङ्गना नयनसुभगं दृष्टिप्रियं भवन्तं नूनं सत्यं सेविष्यन्ते ॥ अनुकूलमारुतचातकशब्दितबलाकादर्शनानां शुभसूचकत्वं शकुनशास्त्रे दृष्टं तद्विस्तरभयान्नालेखि ॥

**पवन अनुकूल बना हुआ तुम्हें धीरे २ चला रहा है, गर्व भरा यह चातक पक्षी तुम्हारी बाँई ओर मीठे २ बोल रहा है। गर्भाधान के आनन्द के परिचय से प्रसन्न हुई बगुलियों की पंक्तियाँ तुझे नेत्र सुखदायी जान निश्चय सेवेंगी।**

**सन्मुख आयेउ दधि अरु मीना ।**
**कर पुस्तक दुइ विप्र प्रवीना ॥**
**मृगमाला दाहिन दिशि आई ।**
**मंगल गन जनु दीन दिखाई ॥ तुलसीदास**

मंद मंद वह बहता मारुत है अनुकूल दिखाता
पी पी गर्व समेत पपीहा मधुर नाम दिशि गाता ।
गर्भाधान समय सुधि करती उड़ती नभ में बक की पंक्ति
नयन सुभग सेवेंगी तुझको करते तेरा मान सभक्ति ।।

मंद मंद मारुत बहे जैसो तोहि सुहाइ ।
हरषित यह चातक मधुर बाँए बोल्यो आइ ।।
बगुली हू नभ में सुभग आई बाँधि कतार ।
गरभदान समरथ समझि तोहि देन मनुहार ।।

( १० )

तां चाऽवश्यं दिवसगणनातत्परामेकपत्नी-
मव्यापन्नामविहतगतिर्द्रक्ष्यसि भ्रातृजायाम् ।
आशाबंधः कुसुमसदृशः प्रायशो ह्यङ्गनानां
सद्यःपाति प्रणयिहृदयं विप्रयोगे रुणद्धि ।।

तां चेति ।। हे मेघ, दिवसानामवशिष्टदिनानां गणनायां संख्याने तत्परामासक्ताम् ।। "तत्परे प्रसितासक्तौ" इत्यमरः ।। अतएवाव्यापन्नाममृताम् । शापावसाने मदागमनप्रत्याशया जीवन्तीमित्यर्थः ।। एकः पतिर्यस्याः सैकपत्नी ताम् । पतिव्रतामित्यर्थः ।। "नित्यं सपत्न्यादिषु" इति ङीप् । नकारश्च ।। भ्रातुर्मे जायां भ्रातृजायाम् ।। मातृवन्निःशङ्कं दर्शनीयामित्याशयः । तां मत्प्रियामविहतगतिरविच्छिन्नगतिः सन्नवश्यं द्रक्ष्यसि चालोकयिष्यस्येव ।। तथा हि । आशातितृष्णा ।। "आशा दिगतितृष्णयोः" इति यादवः । बध्यतेऽनेनेति बन्धो बन्धनम् । वृन्तमिति यावत् । आशैव बन्ध आशा-

बन्धः कर्ता ॥ प्रणयि प्रेमयुक्तमत एव कुसुमसदृशम् । सुकुमारमित्यर्थः । अत एव विप्रयोगे विरहे सद्यःपाति सद्योभ्रंशनशीलमङ्गनानां हृदयं जीवितम् ॥ "हृदयं जीविते चित्ते वक्षस्याकूतयोः" इति शब्दार्णवे ॥ प्रायशः प्रायेण रुणद्धि प्रतिबध्नाति ॥ अर्थान्तरन्यासः ॥

दिन गिनने में लगी हुई मेरी पतिव्रता स्त्री—अपनी भाभी को—सब जगह जानेवाले तुम निश्चय जीती देखोगे। क्योंकि स्त्रियों के कुसुम सदृश आशाबन्ध ही प्रायः तुरत गिरनेवाले स्त्रियों के प्रेम भरे हृदय को वियोग में रोक रखते हैं (अर्थान्तरन्यास प्रगट है)।

दिन गिनती पतिव्रत अनुसरती होती जीती किसी प्रकार
कामचार ! तू भ्रातृवधू को उस, लख लेना निश्चय धार।
प्रीति स्निग्ध मृदु रमणी मानस दुसह विरह में कुसुम समान
गिर जाता यदि आशा बंधन पकड़ न रखता उसका प्रान ॥

मग में रुके न तू कहूँ लखिहै भौजी जाइ।
जीवति दिन गिनती करति पति भरता चितलाइ॥
नेही हिरदो नारि कौ कोमल जैसो फूल।
बिरह माँहि आसा करति ताहि कछुक दृढ़मूल ॥

( ११ )

कर्त्तुं यच्च प्रभवति महीमुच्छिलीन्ध्रामवन्ध्यां
तच्छ्रुत्वा ते श्रवणसुभगं गर्जितं मानसोत्काः।
आ कैलासाद्बिसकिसलयच्छेदपाथेयवन्तः
सम्पत्स्यन्ते नभसि भवतो राजहंसाः सहायाः॥

कर्तुमिति ॥ यद्गर्जितं । कर्तृ । महीमुच्छिलीन्ध्रामुद्भूतकन्दलिकाम् ॥ "कन्दल्यां च शिलीन्ध्रा स्यात्" इति शब्दार्णवे ॥ अत एवावन्ध्यां सफलां कर्तुं प्रभवति शक्नोति । शिलीन्ध्राणां भाविसस्यसम्पत्तिसूचकत्वादिति भावः । तदुक्तं निमित्तनिदाने—"कालाभ्रयोगादुदिताः शिलीन्ध्राः सम्पन्नसस्यां कथयन्ति धात्रीम्" इति ॥ तच्छ्रवणसुभगं श्रोत्रसुखम् । लोकस्येति शेषः । ते तव गर्जितं श्रुत्वा मानसोत्का मानसे सरस्युन्मनसः । उत्सुका इति यावत् ॥ "उत्क उन्मनाः" इति निपातात्साधु ॥ कालान्तरे मानसस्य हिमदुष्टत्वाद्बिसस्य च हंसानां रोगहेतुत्वादन्यत्र गता हंसाः पुनर्वर्षासु मानसमेव गच्छन्तीति प्रसिद्धिः ॥ बिसकिसलयानां मृणालाग्राणां छेदैः शकलैः पाथेयवन्तः । पथि साधु पाथेयं पथि भोज्यम् ॥ "पथ्यतिथिवसतिस्वपतेर्ढञ्" ॥ तद्वन्तः । मृणालकन्दशकल-सम्बलवन्त इत्यर्थः । राजहंसा हंसविशेषाः ॥ "राजहंसास्तु ते चञ्चुचरणै-र्लोहितैः सिताः" इत्यमरः ॥ नभसि व्योम्नि । भवतस्तव । आ कैलासात्कैलास-पर्यन्तम् ॥ पदद्वयं चैतत् ॥ सहायाः सयात्राः ॥ "सहायस्तु सयात्रः स्यात्" इति शब्दार्णवे ॥ सम्पत्स्यन्ते भविष्यन्ति ॥

तुम भूमि को कन्दली उगो अतएव सफल करनेवाले हो, सो कान को अच्छी लगनेवाली तुम्हारी गर्ज सुनकर मान-सरोवर जाने की इच्छा करनेवाले राजहंस, कमलकन्दों के अग्रभाग अपने राह खर्च के लिये साथ लेकर कैलास पर्वत तक आकाश में तुम्हारा साथ देंगे। कन्दली या शिलीन्ध्र पृथ्वी के उपजाऊँ होने का द्योतक है। कहा जाता है हंस वर्षाकाल आते ही अपने घर मानसरोवर चला जाता है।

जिससे भू छत्रक मय होती और उर्वरा प्यारी
ऐसा श्रवण सुभग गर्जित रव तव सुन मनमुदकारी ।
मानस प्रेमी राजहंस दल कमल नाल पाथेय किये
जावेंगे कैलासधाम तक सहचर बन तव साथ दिये ॥

छत्रवती छिति कों करति उच्छलिंध्र उपजाइ ।
सो गरजन तेरी सुनत राजहंस हुलसाइ ॥
मानसरोवर चलन कों कमलनाल लै पाथ ।
उड़िहैं धुर कैलासलों गगनपंथ तो साथ ॥

( १२ )

**आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलं**
**वन्द्यैः पुंसां रघुपतिपदैरङ्कितं मेखलासु ।**
**काले काले भवति भवतो यस्य संयोगमेत्य**
**स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम् ॥**

आपृच्छस्वेति ॥ प्रियं सखायं प्रियसखम् ॥ "राजाहःसखिभ्यष्टच्" इति टच् समासान्तः ॥ तुङ्गमुन्नतं पुंसां वन्द्यैर्नराराधनीयै रघुपतिपदै रामपादन्यासै-मेखलासु कटकेषु ॥ "अथ मेखला । श्रोणिस्थानेऽद्रिकटके कटिबन्धेभबन्धने" इति यादवः ॥ अङ्कितं चिह्नितम् । इत्थं सखित्वान्महत्त्वात्पवित्रत्वाच्च सम्भाव-नार्हम् । अमुं शैलं चित्रकूटाद्रिमालिङ्ग्यापृच्छस्व साधो यामीत्यामन्त्रणेन सभा-जय ॥ "आमन्त्रणसभाजने आप्रच्छन्नम्" इत्यमरः ॥ "आङि नुप्रच्छ्योरुप-संख्यानम्" इत्यात्मनेपदम् ॥ सखित्वं निर्वाहयति–काल इति ॥ कालेकाले प्रतिप्रावृट्कालम् । सुहृत्समागमनकालश्च कालशब्देनोच्यते ॥ वीप्सायां द्विरुक्तिः॥ भवतः संयोगं सम्पर्कमेत्य चिरविरहजमुष्णं बाष्पमुष्माणं नेत्रजलं च ॥ "बाष्पो नेत्रजलोष्मणोः" इति विश्वः ॥ मुञ्चतो यस्य शैलस्य स्नेहव्यक्तिः प्रेमावि-र्भावो भवति । स्निग्धानां हि चिरविरहसङ्गतानां बाष्पपातो भवतीति भावः ॥

**पुरुषों से बन्दित, कटि में रघुनाथ जी के चरणों से चिह्नित, इस ऊँचे अपने प्यारे शैल का आलिङ्गन कर चल, जो समय २ पर तुम्हारे संयोग को पाकर बहुत काल के विरह से उत्पन्न गरम भाफ अपने प्रेम का प्रगट करनेवाला छोड़ता है।**

इस पद्य में पहाड़ का कटिभाग और मनुष्य का भी कटिभाग, तथा काल से वर्षा काल, और उचित समय तथा उष्ण बाष्प से वृष्टिजल तथा नेत्रजल समझा जाना चाहिये। इसलिये इन दोअर्थी शब्दों में श्लेष हुआ। इस रघुपतिचरण के चिन्हों से चित्रकूट पहाड़ की ही पुष्टि होती है।

वंदनीय पुरुषों से कटि में अंकित वर रघुपति पद द्वार
निज प्रियमित्र तुङ्ग उस गिरि से मिल चल उसकी आज्ञाधार।
जिससे तव संयोग मनोहर जब जब आता वर्षा मास
स्रवता बिरहज उष्ण वाष्प चिर करते रहते प्रेम प्रकाश ॥

माँगि सीख गिरितुंग पै अब मीतहिं भरि अंक।
पावन रघुपति-चरण सों अंकित जाको लंक ॥
जब जब तू यातें मिलत बहुत दिनन में आइ।
प्रीति प्रगट तो में करत ताती भाप उठाइ ॥

( १३ )

**मार्गं[4] तावच्छृणु[2,6] कथयतस्त्वत्[5,3]प्रयाणानुरूपं**
**संदेशं[10] मे[9] तदनु[7] जलद[1] श्रोष्यसि[11] श्रोत्रपेयम्।**
**खिन्नः[13] खिन्नः शिखरिषु[14] पदं[15] न्यस्य गन्तासि[21] यत्र[12]**
**क्षीणः[16] क्षीणः परिलघु[18] पयः[19] स्रोतसां[17] चोपभुज्य[20] ॥**

मार्गमिति ॥ हे जलद, तावदिदानीं कथयतः। मत्त इति शेषः। त्वत्प्रयाणस्यानुरूपमनुकूलं मार्गमध्वानम् ॥ "मार्गो मृगपदे मासि सौम्यर्क्षेऽन्वेषणेऽध्वनि" इति यादवः ॥ शृणु । तदनु मार्गश्रवणानन्तरं श्रोत्राभ्यां पेयं पानार्हम्। अतितृष्णया श्रोतव्यमित्यर्थः ॥ पेयग्रहणात्संदेशस्यामृतसाम्यं गम्यते ॥

मे संदेशं वाचिकम् ॥ "संदेशवाग्वाचिकं स्यात्" इत्यमरः ॥ श्रोष्यसि । यत्र मार्गे खिन्नः खिन्नोऽभीक्ष्णं क्षीणबलः सन् ॥ "नित्यवीप्सयोः" इति नित्यार्थे द्विर्भावः ॥ शिखरिषु पर्वतेषु पदं न्यस्य निक्षिप्य । पुनर्बललाभार्थं क्वचिद्विश्रम्येत्यर्थः । क्षीणःक्षीणोऽभीक्ष्णं कृशाङ्गः सन् ॥ अत्रापि कृदन्तत्वात्पूर्ववद्द्विरुक्तिः ॥ स्रोतसां परिलघु गुरुत्वदोषरहितम् । उपलास्फालनखेदितत्वात्पथ्यमित्यर्थः ॥ तथा च वाग्भट्टः—"उपलास्फालनक्षेपनिच्छेदैः खेदितोदकाः । हिमवन्मलयोद्भूताः पथ्या नद्यो भवन्त्यमूः ॥" इति ॥ पयः पानीयमुपभुज्य शरीरपोषणार्थमभ्यवहृत्य च गन्तासि गमिष्यसि ॥ गमेर्लुट् ॥

हे मेघ, अपने जाने के योग्य मार्ग पहले मुझसे सुनले; उसके पीछे कानों से पीने के योग्य अर्थात् तृष्णा के साथ सुनने के योग्य अमृत के समान मीठा मेरा संदेश सुनना। जहाँ तू मार्ग में बार २ क्षीणबल होता हुआ पर्वतों के ऊपर पैर देता हुआ फिर कहीं विश्रामार्थ ठहरता हुआ सोतों का हलका जल पीता हुआ चला जायगा (हलका जल मीठा और नीरोग होता है)।

तू प्रयाण के योग्य मार्ग निज सुन ले पहले मेरे द्वार
तब सुनना संदेशा मेरा—लेने योग्य श्रवण में धार।
करना क्षण विश्राम शैल पर जब २ अति श्रम पाना
सोतों का परिलघु पय पी पी जब जब दुबला जाना ॥

गैल बताऊँ मेघ अब जिहिं चलि पावे चैन।
फिर सुनियो संदेस मम कानन अति सुखदैन ॥
कानन अति सुखदैन थके वा मग में जब तू।
चलियो धरि धरि पाँव शिखर ऊँचिन पै तब तू ॥

भूख लगे सोता मिलैं उथरे अरु बिन मैल।
पी तिन कौ पानी तुरत लीजो अपनी गैल ॥

( १४ )

अद्रेः[1] शृंगं हरति[3] पवनः[2] किंस्विदित्युन्मुखीभि-
र्दृष्टोत्साहश्चकितचकितं मुग्धसिद्धांगनाभिः ।
स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः खं
दिङ्नागानां पथि परिहरन्स्थूलहस्तावलेपान् ॥

अद्रेरिति ॥ पवनो वायुरद्रेश्चित्रकूटस्य शृङ्गं हरति किंस्वित् ॥ किंस्वि-च्छब्दो विकल्पवितर्कादिषु पठितः ॥ इति शङ्कयोन्मुखीभिरुन्नतमुखीभिः ॥ "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति ङीष् ॥ मुग्धाभिर्मूढाभिः ॥ "मुग्धः सुंदरमूढयोः" इत्यमरः । सिद्धानां देवयोनिविशेषाणामङ्गनाभिश्चकितचकितं चकितप्रकारं यथा तथा ॥ "प्रकारे गुणवचनस्य" इति द्विर्भावः ॥ दृष्टोत्साहो दृष्टोद्योगः सन् । सरसा आर्द्रा निचुलाः स्थलवेतसा यस्मिंस्तस्मात् ॥ "वानीरे कविभेदे स्यान्निचुलः स्थलवेतसे" इति शब्दार्णवे ॥ अस्मात्स्थानादाश्रमात्पथि नभोमार्गे दिङ्नागानां दिग्गजानां स्थूला ये हस्ताः करास्तेषामवलेपानाक्षेपान्परिहरन् ॥ "हस्तो नक्षत्रभेदे स्यात्करेभकरयोरपि" इति । "अवलेपस्तु गर्वे स्यात्क्षेपणे दूषणेऽपि च" इति च विश्वः ॥ उदङ्मुखः सन् । अलकाया उदीच्यत्वादित्याशयः ॥ खमाकाशमुत्पतोद्गच्छ ॥ अत्रेदमप्यर्थान्तरं ध्वनयति-रसिको निचुलो नाम महाकविः कालिदासस्य सहाध्यायः परापादितानां कालिदासप्रबंधदूषणानां परिहर्त्ता यस्मिन्स्थाने तस्मात्स्थानादुदङ्मुखो निर्दोषत्वादुन्नतमुखः सन्पथि सारस्वतमार्गे दिङ्नागानाम् । पूजायां बहुवचनम् । दिङ्नागाचार्यस्य कालिदासप्रतिपक्षस्य हस्तावलेपान्हस्तविन्यासपूर्वकाणि दूषणानि परिहरन् ॥ "अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च" इति विश्वः ॥ अद्रेरद्रिकल्पस्य दिङ्नागाचार्यस्य शृङ्गं प्राधान्यम् ॥ "शृङ्गं प्राधान्यसान्वोश्च"

इत्यमरः ॥ हरति किंस्विदिति हेतुना सिद्धैः सारस्वतसिद्धैर्महाकविभिरङ्गनाभिश्च दृष्टोत्साहः सन्खमुत्पतोच्चैर्भवेति स्वप्रबन्धमात्मानं वा प्रति कवेरुक्तिरिति ॥ "संसर्गतो दोषगुणा भवन्तीत्येतन्मृषा येन जलाशयेऽपि । स्थित्वानुकूलं निचुलश्चलन्तमात्मानमारक्षति सिन्धुवेगात् ॥" इत्येतच्छ्लोकनिर्माणात्तस्य कवेर्निचुलसंज्ञेत्याहुः ॥

क्या वायु पहाड़ का शृङ्ग लिये जा रहा है, ऐसी शंका कर मुख ऊपर उठाई सिद्धों की भोली भाली स्त्रियों से आश्चर्य्यचकित उत्साह से देखा गया तू गीले स्थल-बेंतवाले इस स्थान से आकाश मार्ग में दिग्गजों के स्थूल हाथों के अवलेप अर्थात् दूषण से बचता अपने पथ में उत्तर ओर जा। कहा जाता है कि दिग्नागाचार्य्य कोई कालीदास का समकालीन व्यक्ति था जिससे कालीदास का कटाक्ष चल रहा था। उसी के हाथों से बचने का कवि भीतर भीतर इशारा करता है। पद्य भाग में बेंत के लिये निचुल शब्द आया है यह भी भीतर भीतर किसी समकालिक व्यक्ति का बोधक है।

"शैल शृङ्ग क्या पवन उड़ाता" गुन निज मन में चकित प्रभूत
मुग्ध नारियों से सिद्धों की तुम हो ऊपर दृष्ट प्रपूत ।
हरे २ उस निचल कुंज से नभ में ऊपर उठना दूर
दिग् नागों के फुहर करों के करने मद को चकनाचूर ॥

जात तोहि ऊपर निरखि कहिहैं सीस उठाइ ।
मुग्धा सिद्धबधू चकित आपस में बतराइ ॥
आपस में बतराइ बड़ो अचरज कौ लेखो ।
पवन उड़ाये जात खंड परबत कौ देखो ॥

निचुलसरस यह भूमि तजि अब उत्तर चलि भ्रात ।
मेटत मद दिगगजन के नभमारग में जात ॥

( १५ )

**रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत्पुरस्ता-**
**द्वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य ।**
**येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते**
**बर्हेणेव स्फुरितरुचिना गोपवेषस्य विष्णोः ॥**

रत्नेति ॥ रत्नच्छायानां पद्मरागादिमणिप्रभाणां व्यतिकरो मिश्रणमिव प्रेक्ष्यं दर्शनीयमाखण्डलस्येन्द्रस्यैतद्धनुःखण्डम् ॥ एकदिति हस्तेन निर्देशो विवक्षितः ॥ पुरस्तादग्रे वल्मीकाग्राद्वामलूरविवरात् ॥ "वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम्" इत्यमरः ॥ प्रभवत्याविर्भवति । येन धनुःखण्डेन ते तव श्यामं वपुः । स्फुरितरुचिनोज्ज्वलकान्तिना बर्हेण पिच्छेन । "पिच्छबर्हे नपुंसके" इत्यमरः ॥ गोपवेषस्य विष्णोर्गोपालस्य कृष्णस्य श्यामं वपुरिव । अतितरां कान्तिं शोभामापत्स्यते प्राप्स्यते ॥

आगे में इन्द्रधनुष का टुकड़ा बाँबी ( दीमक ) से ऊपर उगा, रत्न की मिली हुई कान्ति की तरह दर्शनीय प्रगट हो रहा है । तुम इससे अपने श्यामले शरीर में अच्छी शोभा पाओगे जैसे गोपवेषधारी विष्णु अर्थात कृष्ण ने चमकती मोर-पूँछ से पायी थी । लोगों से कहा जाता है कि इन्द्रधनुष साँप के बिल से प्रगट होता है ।

**नीलम मणि पुखराज आदि के संमिश्रण सम सुन्दर**
**आखंडल का धनुष खंड वह है बाँबी के बाहर ।**

उससे तेरा श्याम कलेवर दर्शेगा कमनीय महा
मोर पंख से शोभित जैसे गोप विष्णु का रूप रहा ॥

सोहत पूरब ओर यह रतनजाल अनुमान ।
निकसत बाँबी ते भलो इंद्रचाप रुचदान ॥
इंद्रचाप रुचदान जासु मिलि तो तन कारो ।
पावत है छबि अधिक लगत नैनन को प्यारो ॥
मोरचंद्रिका संग सुभग जैसे मन मोहत ।
गोपवेष गोविंद बहुत स्यामन तन सोहत ॥

( १६ )

**त्वय्या[2]यत्तं कृषि[1]फलमि[3]ति भ्रूविलासा[5]नभिज्ञैः**
**[4]प्रीतिस्निग्धै[6]र्जनपदवधूलोचनैः पी[7]यमानः ।**
**स[9]द्यः सीरोत्कषणसुरभि क्षेत्र[10]मा[11]रुह्य मा[8]लं**
**[12]किंचित्पश्चाद्व्रज[15] [13]लघुगतिर्भूय[14] एवोत्तरेण ॥**

त्ययीति ॥ कृषेर्हलकर्मणः फलं सस्यं त्वयि ॥ अधिकरणविवक्षायां सप्तमी ॥ आयत्तमधीनम् ॥ "अधीनो निघ्न आयत्तः" इत्यमरः ॥ इति हेतोः प्रीत्यास्निग्धैः । अकृत्रिमप्रेमार्द्रैरित्यर्थः । भ्रूविलासानां भ्रूविकाराणामनभिज्ञैः । पामरत्वादिति शेषः । जनपदवधूनां पल्लीयोषितां लोचनैः पीयमानःसादरं वीक्ष्यमाणः सन् । मालं मालाख्यं क्षेत्रं शैलप्रायमुन्नतस्थलम् ॥ "मालमुन्नत-भूतलम्" इत्युत्पलमालायाम् ॥ सद्यस्तत्कालमेव सीरैर्हलैरुत्कर्षणेन कर्षणेन सुरभि घ्राणतर्पणं यथा तथारुह्य । तत्राभिवृष्येत्यर्थः ॥ "सुरभिर्घ्राणतर्पणः" इत्यमरः ॥ किंचित्पश्चाल्लघुगतिस्तत्र निर्वृष्टत्वात्क्षिप्रगमनःसन् "लघु क्षिप्रमरं द्रुतम्" इत्यमरः ॥ भूयः पुनरप्युत्तरेणैवोत्तरमार्गेणैव व्रज गच्छ ॥ तृतीयाविधाने

"प्रकृत्यादिभ्य उपसंख्यानम्" इति तृतीया ॥ यथा कश्चिद्बहुवल्लभः पतिः कुत्रचित्क्षेत्रे कलत्रे गूढं विहृत्य ॥ "क्षेत्रं शरीरकेदारे सिद्धस्थानकलत्रयोः" इति विश्वः ॥ दाक्षिण्यभङ्गभयान्नीचमार्गेण निर्गत्य पुनः सर्वाध्यक्ष इव संचरति तद्वदिति ध्वनिः ॥

खेती का फल तुम्हारे अधीन है, इस कारण प्रीति से चिकने बने—भ्रूकुटिविलासों से अनभिज्ञ—गाँव की स्त्रियों के नेत्रों से आदरपूर्वक पीया गया अर्थात् देखा गया तू-हल से अभी जोती गई अतएव महँकनेवाली मालभूमि पर चढ़ अर्थात् वहाँ कुछ वृष्टि कर, फिर कुछ चुपचाप पीछे हटकर, उत्तर रास्ते से चलना। यहाँ कवि ने मेघ कोबहु वल्लभ पति बना कर गूढ़ विहार कराया है जिसमें उसका दाक्षिण्य भंग न हो—इससे यहाँ समासोक्ति अलंकार की भावना है।

भ्रू-विलास-अनभिज्ञ, प्रीति मृदु, ग्राम नारियों के दृग द्वार
तुम जा देखे गये प्रीति सह कृषि फल के दानी निर्धार।
हल से द्रुत जोती सुगन्धमय माल भूमि पर प्रवर चढ़े
किंचित पच्छिम जा लघु गति हो जाना उत्तर ओर कढ़े॥

करके दृग ऊँचे लखें भोरे भरे पियार।
ग्रामबधू तुहि जानके खेतीफल दातार॥
खेतीफल दातार पहुँचियो मालभूमि वर।
नए जुते जहँ खेत सुगंधित होइँ अधिकतर॥
कछु पच्छिम दिसि पलटि शीघ्र गति तन में धरके।
चलियो जलधर मीत फेर उत्तर मुख करके॥

( १७ )

**त्वामासारप्रशमितवनोपप्लवं साधु मूर्ध्ना**
**वक्ष्यत्यध्वश्रमपरिगतं सानुमानाम्रकूटः ।**
**न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय**
**प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः ॥**

त्वामिति ॥ आम्राश्चूताः कूटेषु शिखरेषु यस्य स आम्रकूटो नाम सानुमान्पर्वतः ॥ "आम्रश्चूतो रसालोऽसौ" इति । "कूटोऽस्त्री शिखरं शृङ्गम्" इति चामरः । आसारो धारावृष्टिः ॥ "धारासंपात आसारः" इत्यमरः ॥ तेन प्रशमितो वनोपप्लवो दावाग्निर्येन तम् । कृतोपकारमित्यर्थः । अध्वश्रमेण परिगतं व्याप्तं त्वां साधु सम्यङ्मूर्ध्ना वक्ष्यति वोढा ॥ वहेर्लृट् ॥ तथा हि । क्षुद्रः कृपणोऽपि ॥ "क्षुद्रो दरिद्रे कृपणे नृशंसे" इति यादवः ॥ संश्रयाय संश्रयणाय मित्रे सुहृदि ॥ "अथ मित्रं सखा सुहृत्" इत्यमरः ॥ प्राप्त आगते सति । प्रथमसुकृतापेक्षया पूर्वोपकारपर्यालोचनया विमुखो न भवति । तस्तथा तेन प्रकारेणोच्चैरुन्नतः स आम्रकूटः किं पुनर्विमुखो न भवतीति किमु वक्तव्यमित्यर्थः ॥ एतेन प्रथमावसथे सौख्यलाभात्ते कार्यसिद्धिरस्तीति सूचितम् । तदुक्तं निमित्तनिदाने–"प्रथमावसथे यस्य सौख्यं तस्याखिलेऽध्वनि । शिवं भवति यात्रायामन्यथा त्वशुभं ध्रुवम् ॥" इति ॥

**आम्रकूट नामक ( अर्थात् जिसके शिखर पर आमों के वृक्ष हैं ) वह पहाड़ जिसकी दावाग्नि को तुम जल की वृष्टि कर शान्त कर दोगे, मार्ग के श्रम से थके हुए तुम्हें अपने माथे पर ठीक तौर से चढ़ा लेगा । छोटा जन भी आश्रय लेने के लिये आये हुए अपने मित्र को उसकी पहली भलाई को याद कर विमुख नहीं होने देता । फिर जो तुम्हारे ऐसे ऊँचे जन हैं–उनका तो कहना ही क्या । पहले ही स्थान में आदरपात्र होने से सुख लाभ तथा रास्ते के मंगल की ध्वनि है ।**

बन की आग बुझानेवाले तुझे देखकर श्रमित अपार
सानुमान वह आम्रकूट गिरि लेगा तव निज सिर पर भार।
लघुजन भी शरणागत जन के पूर्व सुकृत को करके याद
होता विमुख न फिर क्या कहना जो तव सम हो गुरु-मर्याद॥

अम्रकूट तनताप मेटी तैं बहुधा बरसि।
सो धरिहै सिर आप तो मारग के थकित कों॥
मीतहिं आए द्वार बिमुख होत नहिं नीचहू।
सुमिरि प्रथम उपकार ऊँच बिमुख कब ह्वै सके॥

( १८ )

छन्नोपान्तः परिणतफलद्योतिभिः काननाम्रै-
स्त्वय्यारूढे शिखरमचलः स्निग्धवेणीसवर्णे।
नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थां
मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः॥

छन्नेति॥ हे मेघ, परिणतैः परिपक्वैः फलैर्द्योतन्त इति तथोक्तैः। आषाढे वनचूताः फलन्ति पच्यन्ते च मेघवातेनेत्याशयः। काननाम्रैर्वनचूतैश्छन्नोपान्त आवृतपार्श्वोऽचल आम्रकूटाद्रिः स्निग्धवेणीसवर्णे मसृणकेशबन्धच्छाये। श्यामवर्ण इत्यर्थः॥ "वेणी तु केशबन्धे जलस्रुतौ" इति यादवः॥ त्वयि शिखरं शृङ्गमारूढे सति॥ "यस्य च भावेन भावलक्षणम्" इति सप्तमी॥ मध्ये श्यामः शेषे मध्यादन्यत्र विस्तारे परितः पाण्डुर्हरिणः॥ "हरिणः पाण्डुरः पाण्डुः" इत्यमरः॥ भुवः स्तन इव। अमरमिथुनानाम्। खेचराणामिति भावः। प्रेक्षणीयां दर्शनीयामवस्थां नूनं यास्यति। मिथुनग्रहणं कामिनामेव स्तनत्वेनोत्प्रेक्षा संभवतीति कृतम्। यथा परिश्रान्तः कश्चित्कामी कामिनीनां कुचकलशे विश्रान्तः सन्स्वपिति तद्वद्भवानपि भुवो नायिकायाः स्तन इति ध्वनिः॥

पके पके फलवाले वन के आमों से ढका हुआ पहाड़-चिकनी वेणी के वर्ण वाले तुझसे आरूढ़ होने पर निश्चय कर बीच में काले, शेष भाग में गौर वर्णवाले, पृथ्वी के स्तन के समान देवमिथुनों को देखने योग्य हो जायगा।

पके २ विपिनाम्र फलों से आच्छादित होता गिरि अंग
शिखर में चिकनी वेणी के सम निज सवर्ण पा तेरा संग।
सुर सुन्दरियों को दर्शेगा भू-नारी के स्तन अनुसार
श्याम मध्य में अन्य भाग में धारणकारी गौराकार॥

रह्यो चहूँ दिसि छाइ पके आम वन शैल वह।
ता सिर जब तू जाइ बैठे चिक्कन चिकुर रँग॥
तुरत लहे छबि सोइ जोग देवदम्पति लखन।
मनहु स्यामता होइ गोरे भूमि उरोज बिच॥

( १९ )

**स्थित्वा तस्मिन्वनचरवधूभुक्तकुञ्जे मुहूर्तं**
**तोयोत्सर्गद्रुततरगतिस्तत्परं वर्त्म तीर्णः।**
**रेवां द्रक्ष्यस्युपलविषमे विंध्यपादे विशीर्णां**
**भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य॥**

स्थित्वेति॥ हे मेघ, बने चरन्ति ते बनचराः॥ "तत्पुरुषे कृति बहुलम्" इति बहुलग्रहणादलुग्भवति॥ तेषां वधूभिर्भुक्ताः कुञ्जा लतागृहा यत्र तस्मिन्॥ "निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे" इत्यमरः॥ तत्र ते नयनविनोदोऽस्तीत्यर्थः। तस्मिन्नाम्रकूटे मुहूर्तमल्पकालम्। न तु चिरं स्वकार्यविरोधादिति भावः॥ "मुहूर्तमल्पकाले स्याद्घटिकाद्वितयेऽपि च"

इति शब्दार्णवे ॥ स्थित्वा विश्रम्य । तोयोत्सर्गेण "त्वामासार—" इत्युक्त-वर्षणेन द्रुततरगतिर्लाघवाद्धेतोरतिक्षिप्रगमनः सन् । तस्मादाम्रकूटात्परमनन्तरं तत्परं वर्त्म मार्गं तीर्णोऽतिक्रान्तः । उपलैः पाषाणैर्विषमे विन्ध्यस्याद्रेः पादे प्रत्यन्तपर्वते ॥ "पादाः प्रत्यन्तपर्वताः" इत्यमरः ॥ विशीर्णां समन्ततो विस्रमगाम् ॥ एतेन कस्याश्चित्कामुक्याः प्रियतमचरणपातोऽपि ध्वन्यते ॥ रेवां नर्मदाम् ॥ "रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका" इत्यमरः ॥ गजस्याङ्गे शरीरे भक्तयो रचनाः रेखा इति यावत् ॥ "भक्तिर्निषेवणे भागे रचनायाम्" इति शब्दार्णवे ॥ तासां छेदैर्भङ्गिभिर्भाभिर्विरचितां भूतिं शृङ्गारमिव भसितमिव वा ॥ "भूतिर्मातङ्गशृङ्गारे जातौ भस्मनि संपदि" इति विश्वः ॥ द्रक्ष्यसि । अयमपि महांस्ते नयनकौतुकलाभ इति भावः ॥

बन में रहनेवाली स्त्रियों से भोगे गये हुए-उस लताकुञ्ज में कुछ समय ठहर, जल वर्षा कर कुछ हलके हो-उस आम्रकूट से कुछ आगे बढ़, विन्ध्यपर्वत के पद भाग में-ऊँचे नीचे पत्थरों में पड़ी हुई नर्मदा तुम्हें ऐसी दीख पड़ेगी, जैसे हाथी के तन पर सफेद मिट्टी से की हुई रेखाएँ हों (पहाड़ हाथी है और नदी की अनेक धाराएँ रेखाएँ)।

बनचरियों से भुक्त कुञ्ज में उस निज स्थिति मुहूर्त भर आन
जलधारा वर्षाकर द्रुत गति फिर करना आगे प्रस्थान ।
विंध्य पाद के विषम उपल में रेवा की सुन्दर जलधार
दर्शेगी जैसे गजतनु पर हो रजरेखा का विस्तार ॥

बिलमि तहाँ कछु बार विहरति जहँ बनचर-बधू ।
करियो धारासार फिर द्रुतगति मग लाँघियो ॥
लखियो रेवा जाइ बिंध्यशिलन पै यों बहे ।
मानहु दई रचाइ गजतन रजरेखा बिशद ॥

( २० )

**तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टि-**
**र्जम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः ।**
**अन्तःसारं घन तुलयितुं नानिलः शक्ष्यति त्वां**
**रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥**

तस्या इति ॥ हे मेघ, वान्तवृष्टिरुद्गीर्णवर्षः सन् ॥ कृतवमनश्च व्यज्यते । तिक्तैः सुगन्धिभिस्तिक्तरसवद्भिश्च ॥ "तिक्तो रसे सुगन्धौ च" इति विश्वः ॥ वनगजमदैर्वासितं सुरभितं भावितं च । "हिमवद्विन्ध्यमलया गजानां प्रभवाः" इति विन्ध्यस्य गजप्रभवत्वादिति भावः । जम्बूकुञ्जैः प्रतिहतरयं प्रतिबद्ध-वेगम् । सुखपेयमित्यर्थः । अनेन लघुत्वं कषायभावना च व्यज्यते । तस्या रेवायास्तोयमादाय गच्छेर्व्रज । हे घन मेघ, अन्तः सारो बलं यस्य तं त्वामनिल आकाशवायुः । शरीरस्थश्च गम्यते । तुलयितुं न शक्ष्यति शक्तो न भविष्यति । तथाहि । रिक्तोऽन्तः सारशून्यः सर्वोऽपि लघुर्भवति । प्रकम्प्यो भवतीत्यर्थः ॥ पूर्णता सारवत्ता गौरवायाप्रकम्प्यत्वाय भवतीत्यर्थः ॥ अयमत्र ध्वनिः—आदौ वमनशोधितस्य पुंसः पश्चाच्छ्लेष्मशोषणाय लघुतिक्त कषायायाम्बुपानाल्लब्ध-बलस्य वातप्रकम्पो न स्यादिति । यथाह वाग्भटः—"कषायाश्चाहिमास्तस्य विशुद्धौ श्लेष्मणो हिताः । किमु तिक्तकषाया वा ये निसर्गात्कफापहाः ॥ कृतशुद्धेः क्रमात्पीतपेयादेः पथ्यभोजिनः । वातादिभिर्न बाधा स्यादिन्द्रि-यैरिव योगिनः ॥" इति ॥

**हे मेघ वहाँ तू वर्षा कर ( दूसरे पक्ष में वमन कर ), तिक्त अर्थात् सुगन्धि वाले ( दूसरे पक्ष में तीते ) वनगजों के मदों से वासित-सुरभित ( दूसरे पक्ष में बनाये ), जामुन के कुञ्जों से टकराते हुए उसके जल को पीकर आगे चलना। तब, भीतर में भारी बने हुए तुम्हें पवन न सह सकेगी—यह ठीक ही है**

कि जो खाली रहता है वह हलका रहता है और जो भरा रहता है वह भारी होता है (पहले वमन से शोधन कर पीछे तिक्त कषाय जल पान करने से बल बढ़ता है, तब वात प्रकम्प नहीं होता-यह आयुर्वेद शास्त्र है)।

बन गज मद से सुरभित उसका जंबु कुञ्ज में बर अवरुद्ध
वमन वृष्टि से सलिल पान कर करना अपना मार्गप्रवृद्ध।
तब होगा नहि पवन शक्ति में तेरा लेना भार
रिक्त सभी लघु होते भारी रहता जिसमें सार॥

लै चलियो वा नदि के नीरा। जमुनी कुञ्जन रुकि भए धीरा॥
बन-हाथिन जिनमें मद त्यागे। अधिक सुगंधित तिन हित लागे॥
अंतर जब तेरौ भरि जाई। पवनहु रोकि न तोहि सकाई॥
रीते सबहि तुच्छ जग माहीं। बिन पूरनता गौरव नाहीं॥

( २१ )

नीपं दृष्ट्वा हरितकपिशं केशरैरर्द्धरूढै-
राविर्भूतप्रथममुकुलाः कन्दलीश्चाऽनुकच्छम्।
जग्ध्वाऽरण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः
सारङ्गास्ते जललवमुचः सूचयिष्यन्ति मार्गम्॥

नीपमिति॥ सारंगा मतंगजाः कुरंगा भृङ्गा वा॥ "सारंगश्चातके भृङ्गे कुरंगे च मतंगजे" इति विश्वः। अर्धरूढैरेकदेशोद्गतैः केसरैः किञ्जल्कैर्हरितं पालाशवर्णं कपिशं कृष्णपीतं च॥ "पालाशो हरितो हरित्" इति। "श्यावः स्यात्कपिशो धूम्रधूमलौ कृष्णलोहिते" इति चामरः॥ श्यामवर्णमिति यावत्॥ "वर्णो वर्णेन" इति समासः॥ नीपं स्थलकदम्बकुसुमम्॥ "अए स्थलकदम्बके।

नीपः स्यात्पुलके" इति शब्दार्णवे ॥ दृष्ट्वा संप्रेक्ष्य। विदित्वेति यावत्। तथा कच्छेष्वनूपेष्वनुकच्छम् ॥ "अव्ययं विभक्ति—" इत्यादिना विभक्त्यर्थेऽव्ययीभावः ॥ "जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः" इत्यमरः ॥ आविर्भूताः प्रथमाः प्रथमोत्पन्ना मुकुला यासां ताः कन्दलीर्भूमिकदलीः ॥ "द्रोणपर्णी स्निग्धकन्दा कन्दली भूकदल्यपि इति शब्दार्णवे जग्ध्वा भक्षयित्वा ॥ "अदो जग्धिः—" इति जग्ध्यादेशः ॥ अरण्येष्वधिक सुरभिमतिघ्राण तर्पणम् ॥ "दग्धारण्येषु" इति । पाठे "दग्धम्" इत्यधिकविशेषणम् ॥ अर्थवशात्कन्दलीश्च दृष्ट्वैवेत्यन्वयो द्रष्टव्यः ॥ उर्व्या भूमेर्गन्धमाघ्राय जललवमुचो मेघस्य ते तव मार्गं सूचयिष्यन्त्यनुमापयिष्यन्ति । यत्रयत्र वृष्टिकार्यं कन्दलीमुकुलनीपकुसुमादिकं दृश्यते तत्रतत्र त्वया वृष्टमित्यनुमीयत इति भावः ॥

आधे उत्पन्न हुए केशरों से हरे, पीत कृष्ण बने हुए स्थल कदम्ब के फूल देखकर, जलतट में पहले पहल कोंढ़ी लगी कन्दलियां खाकर, बनों में अधिक सुगंधवाली पृथ्वी की महँक सूँघकर-सारंग ( हाथी वा भृंग वा हरिण ) तुझ जलवृष्टि करनेवाले के मार्ग बतलावेंगे। नीप कुसुम, कन्दली, गंधादि कार्य्य देख जलवृष्टि रूपी कार्य्य अनुमान कर लिया जावेगा, तात्पर्य्यार्थ समझ लिया जाना चाहिये।

कुछ २ केसर लगे हरित औ कपिश वर्ण के नीप निहार
नव मुकुलित सुन्दर जल तट की मधुर कन्दली भक्षण धार।
अति सुगन्धमय वन धरती की महँक सूंघते हे जल वाह
कह देंगे सारंग शीघ्र ही तुझ जल कण त्यागो की राह॥

देखि कदंब सुमन मन भाए। हरित स्याम मकरंद सुहाए॥
कूलन माहिं निरखि कंदलिका। नवकुसुमित बहु सुंदर कलिका॥

दावानल भसमित कानन में । भूमि सुगंध सूँघि मुद मन में ॥
मोर जलद तुहि आदर दैहैं । आगे उड़ि उड़ि पंथ दिखैहैं ॥

## प्रक्षिप्त ( १ )

"अम्भोविन्दुग्रहणचतुरांश्चातकान्वीक्षमाणः
श्रेणीभूताः परिगणनया निर्दिशन्तो बलाकाः ।
त्वामासाद्य स्तनितसमये मानयिष्यन्ति सिद्धाः
सोत्कम्पानि प्रियसहचरीसम्भ्रमालिंगितानि ॥

अम्भ इति ॥ अम्भोबिन्दूनां वर्षोदबिन्दूनां ग्रहणे । सर्वंसहापतितमम्बु न चातकस्य हितम्" इति शास्त्राद्भूस्पृष्टोदकस्य तेषां रोगहेतुत्वादन्तराल एव स्वीकारे चतुरांश्चातकान्वीक्षमाणाः कौतुकात्पश्यन्तः श्रेणीभूता बद्धपंक्तीः ॥ अभूततद्भावे च्विः ॥ बलाका बकपंक्तीः परिगणनयैका द्वे तिस्र इति संख्यानेन निर्दिशन्तो हस्तेन दर्शयन्तः सिद्धाः स्तनितसमये त्वद्गर्जितकाले सोत्कम्पान्युत्कम्पपूर्वकाणि प्रियसहचरीणां संभ्रमेणालिंगितान्यासाद्य । स्वयं ग्रहणाश्लेषसुखमनुभूयेत्यर्थः । त्वां मानयिष्यन्ति । तन्निमित्तत्वात्सुखलाभस्येति भावः ॥

जलविन्दु के पकड़ने में चतुर चातकों को देखते हुए ( क्योंकि वे गिरे जल का पान नहीं करते, ऊपर ही पकड़ पकड़ पीते हैं ), एक दो तीन चार कह कर श्रेणीबद्ध बगुलियों को हाथ से दिखाते हुए और तुम्हारे गर्जने के समय अपनी सहचरी प्यारियों से जल्दी में कम्प के साथ आलिङ्गित किये जाते हुए-सिद्ध लोग तुम्हारा बड़ा आदर करेंगे । क्योंकि, उन्हें यह आलिङ्गन सुख तुम्हारे ही कारण मिलेगा ।

जल कण लेने वाले धार । लखते चातक चतुर अपार
बगुलों की वर पंक्ति दिखाते । एक बोल दो तीन गिनाते ।

